॥ आचमनोपनिषत् ॥

ॐ आचमनविधिं व्याख्यास्यामः । जङ्घे पाणिपादौ प्रक्षाल्य प्राङ्मुख उदङ्मुखो वा बद्धशिखो यज्ञोपवीती । ब्राह्मणस्य दक्षिणे हस्ते पञ्च तीर्थानि भवन्ति अङ्गुल्यग्रे देवतीर्थं कनिष्ठिकामूले आर्षिकं तीर्थं [अङ्गुष्ठतर्जन्योर्मध्ये] पैतृकं तीर्थं अङ्गुष्ठमूले ब्रह्मतीर्थं मध्ये अग्नितीर्थम् । न तिष्ठन्न हसन् न बुद्बुदैर्न च लोमैः गोकर्णाकृतिवत् कृत्वा माषमग्नजलं पिबेत् । तेन त्रिराचामेत् । प्रथमं यः पिबेदृग्वेदः प्रीणातु । द्वितीयं यःपिबेद्यजुर्वेदः प्रीणातु । तृतीयं यः पिबेत् सामवेदः प्रीणातु । लोमाधरोष्ठमथर्ववेदः प्रीणातु । मुखमग्नितृप्तं सर्वं प्रोक्षति । यः पादो प्रोक्षति यश्चक्षुषी यश्चन्द्रमादित्यौ यन्नाभिं तेन पृथिवी यस्ततस्तेन विष्णुः । यच्छिरस्तेन रुद्रः । मूर्ध्नि शतकुबेरः । सर्वदेवत्यास्ते प्रीणन्तु । य एवं वेद । इत्युपनिषत् ॥

इत्याचमनोपनिषत् समाप्ता ।